महिमा विभूतिरित्यर्थः । अयं भावः—यथा सगुणे स्थितं निर्गुणं स्वरूपमुपासको न प्राप्नोति तदुपासकत्वाभावात्तथा तद्गतं जगत्स्रष्टृत्वादिकमप्यैश्वर्यं न प्राप्नोति *तदुपास्त्यभावादुपास्त्यभावश्च श्रुत्यभावादिति ॥ १९ ॥

अत्र दृष्टान्तार्थं निर्गुणं स्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' [ क० ५ । १५ ] इत्याद्या श्रुतिः 'न तद्भासयते सूर्यः' [ भ० गी० ५ । ६ ] इत्याद्या स्मृतिरिति ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं न जगद्व्यापारेण 'तमाहाऽऽपो वै खलु पीयन्ते लोकोऽसौ' इति । तस्माल्लिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः । तं ब्रह्मलोकस्थमुपासकं हिरण्यगर्भ आह आपो वै खल्वमृतमय्यो मया पीयन्ते भुज्यन्ते तवाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः ॥ २१ ॥

ननु यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं सातिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात्तथा च विदुषोऽप्यावृत्तिः प्रसज्येतेत्याशङ्क्य दयासिन्धुर्भगवान्बादरायणः समाधत्ते—

---

गोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा हि द्विरूपां हि यस्मात्स्थितिमाहाऽऽम्नायः—एतावानस्य महिमेत्यादिना ॥ १९ ॥

नन्वत्र पादत्रयमुपलभ्यते न त्वस्य प्रमाणं किंचिदित्यत आह—दर्शयत इति । एवं विकारावर्ति रूपं श्रुतिस्मृती दर्शयतः । श्रुतिर्न तत्र सूर्य इत्याद्या । स्मृतिर्न जायत इत्याद्या । चकारो मुक्तेरपि सत्त्वमाह ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—भोगेति । अनादिसिद्धेन परमेश्वरेण भोगमात्रं समानं योगिनां यथैतां देवतामित्यादिना । तदेव लिङ्गं जगद्व्यापाराभावे । चकारादनेकेश्वरादिदोषश्च ॥ २१ ॥

---

* ख. भूतोत्पादनसमये योगिनामीश्वरसंनिधानाभावादित्यर्थः ।

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव तेषां न पुनरावृत्तिरित्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदामावृत्तिशङ्कैव नास्ति यतः सगुणविदामपि निर्गुणाश्रयणेनैवानावृत्तिर्नान्यथा । तस्माद्ब्रह्मविदां निरस्तानर्थव्रातस्वप्रभनिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

य: सर्वश्रुतिबन्दिवन्दिततनुर्मायात्मनिद्रान्तगः
सुप्तोऽस्मिन्भवपत्तने परिमिते कल्पान्तकल्पान्तरे[1] ।
यः सर्वापरिपन्थिसाङ्गनयजप्रज्ञाप्रवाहान्तज-
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ॥ १ ॥

अस्मिन्पद्येऽध्यायचतुष्टयार्थः सूचितः ।
विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ।
व्यासवाङ्मणिसंहब्धा प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणाशिक्षितश्रीरामकिंकरधर्मकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ॥

---

ननु एवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिरिति चेत्—अनावृत्तिरिति । नाऽऽवृत्तिश्च शब्दात् । सूत्राभ्यासः शास्त्रसमाप्तिं द्योतयति ॥ २२ ॥

सूत्राणि सूक्ष्माणि हि चर्मनेत्रै-
र्बोद्धुं न शक्यानि सुवर्णसंघात् ।
तेषां प्रबोधाय सुवर्णजालं
निःसारितं भूरि विधाय दीपम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य
श्रीमच्छंकरानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

१ क. 'निद्रां मतः सु' । २ क. 'न्ततल्पा' ।

*

# श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

## इ.



## ई.

## द.

**प.**

## फ.



## ब.



## भ.

## म.



## य.

## श.

## स.